MEMORIAL EDITION OF THE WORKS

OF

# Sree Nigamantha Maha Desika

Vol i.

# NYAYAPARISUDHI.

# NYAYAPARISUDHI

14801

## A Treatise on Nyayasastra

BY

SREE NIGAMANTHA MAHA DESIKA

EDITED BY

THE SREE VISISHTADVAITHA PRAVACHANA SABHA,

*Tiruvaheendrapuram,*




MADRAS

PRINTED AT THE BRAHMAVADIN PRESS

1913




॥ श्रीः ॥

॥ श्रीमते रामानुजाय नमः ॥

कवितार्किकसिंहैः सर्वतन्त्रस्वतन्त्रैः श्रीमन्निगमान्त-

महादेशिकैर्विरचिता

# न्यायपरिशुद्धिः

श्रीविशिष्टाद्वैतप्रवचनसभया प्रकाशिता ॥

१९१३

मद्रास्

ब्रह्मवादिनी मुद्राक्षरशालायां मुद्रिता ॥

## विषयसूचिका ॥

# Foreword

The Sree Visistadwaita Pravachana Sabah, Tiruvahindrapuram, under whose auspices the work is published, owes an apology to the public for the delay in bringing it out. But as this is the first attempt at its publication, and the manuscripts were in most cases imperfect and misleading, the difficulty experienced was more than of an ordinary nature.

The Sabah is deeply indebted to Srimad Ubhaya Satavadhanam Tirumalai Echambadi Srinivasachariar, Tiruvahindrapuram, on whom practically devolved the entire duty of editing, and who, in spite of ill health and great personal inconvenience, zealously accomplished it as a task of love, prompted merely by an unbounded desire to help the cause of learning at any cost. As for the success of his achievement, the Sabha is content to keep silent, because it feels confident that apart from his wide fame as a scholar and author, the manner in which he has edited this work and the priceless introduction which he has written, will afford more eloquent testimony to the value of his services than what all it can express.

The Sabha also takes this opportunity to thank Sri Ubhaya. R. V. Krishnamachariar and Sri Ubhaya Chetlur Narasimhachariar for the help they have rendered in the edition of this work; as also to Sri Ubhaya V. Krishnamachariar, of the Oriental. M. S. S. Library Madras, for his willing co-operation throughout in correcting the proofs and seeing the work through the press.

In conclusion the Sabha also express its thanks to the proprietors of the Brahmavadin press for their kind services.



# ॥ भूमिका ॥

॥ श्रीमते भगवद्रामानुजाय नमः ॥

॥ श्रीमते निगमान्तमहादेशिकाय नमः ॥

श्रीमद्वेङ्कटनाथदेशिकमणिप्रज्ञासरित्तरङ्गपरम्परापरिणामभूतं न्यायपरिशुद्ध्यभिधानं प्रबन्धरत्नमिदं जयति जीवितमिव न्यायविस्तरस्य विद्यास्थानस्य श्रीभगवद्रामानुजमुनिवरक्षुण्णवर्त्मनो ब्रह्ममीमांसाशास्त्रस्य च। अनुपजीव्य चेदं विद्यास्थानं को विभवः स्पन्दितुमपि शेषस्य विद्यास्थानजातस्य ? । सर्वमेव हि लोके श्रुतं संशयविपर्ययाभ्यामाहितपारिप्लवं वात्यास्पृष्टमिव तृणशकलं न कथंचिदपि प्रतितिष्ठति । प्रमाणपरीक्षया तु यथावदुपपादितया दृषदेव व्यपोढाविक्षोभं निष्कम्पमवतिष्ठते । प्रमाणपरीक्षैव च प्रथमावतारपदवी न्यायविस्तरस्य । पदवाक्यप्रमाणभेदेन हि त्रेधा विभजन्ति शास्त्रं शास्त्रविदः । तत्र पदं नाम—शब्दानुशासनं पाणिन्यादिप्रणीतम् । वाक्यं च—विचारपूर्वकश्रौतवाक्यार्थनिर्णयरूपं कर्मब्रह्मात्मकविषयविभागविभक्तमुभयं मीमां-

साशास्त्रम् । प्रमाणं तु—क्वचिदप्यर्थेष्वनवगाढावष्टम्भां स्वात्मन्यप्यनुपजातविस्रम्भां डोलायमानां बुद्धिं करेणुमिव तर्कशृङ्खलाभिरालानयन्मननव्यपदेशं शास्त्रम्; यस्य संज्ञान्तरं न्यायविस्तरः तर्कशास्त्रम् इत्यादि ॥

तदेतत् प्रमाणप्रधानमपि प्रमाणगतेः प्रमेयस्वरूपविवेचनपर्यवसानतया प्रमेयेपि न्यस्तपदं प्रवृत्तम् । इतरेतरविसंवादसंरब्धोद्धुरैरास्तिकैर्नास्तिकैश्च बहुधा वादिभिः स्वस्वच्छन्दानुरोधेनान्यथा चान्यथा च प्रमेयं प्रतिपद्यमानैरितस्ततः परिकृष्यमाणानि प्रमाणान्यपि परावृत्तरूपतया लक्षणतो दुर्ग्रहाण्यभूवन् । मानाभासव्यामिश्राणि हि मानानि न सुकराणि विवेक्तुम् । तदेवं शास्त्रमेव पङ्किलीकृतं चक्षुरिव तिमिरोपसृष्टं विगलितार्थग्रहणपाटवं संवृत्तम् । अविपर्यस्तलक्षणं प्रमाणवर्गं परिगृह्णद्भिरपि सौगतार्हतकापिलचार्वाकजैमिनीयादिभिरङ्गेष्ववान्तरभेदेषु च न्यूनातिरेकमास्थितैरनेकधोपयोगादनेकान्तीकृतमतयः कृतमतयोपि स्वस्वोपदेशपारम्परीप्रत्ययादेकतमं पक्षमभिमन्यमानाः स्वपरिग्रहावसादकातरतया पक्षान्तरेषु साभ्यसूयाश्चिरायापि गुरुकुलेषु परिश्रम्यालब्धबुद्धिप्रसादा विभ्राम्यन्त एवानुभूयन्ते । अतः

सर्वोपयोगाय दोषगुणहानोपादानाभ्यां शिक्षणीयस्यास्य न्यायविस्तरस्य पृथक्प्रस्थानं न्यायदर्शनं नाम सूत्रजातं गौतमेन मुनिना प्रथमं प्रणीतम् ; यत्र प्रमाणाप्रमाणादिविवेचनया तत्त्वनिर्णयोपायास्तत्र च संभवन्तो गुणदोषाः कथासु च ग्राह्यपरिहार्यविभागाः सविशेषं प्रदर्शिताः ॥

तच्च न्यायदर्शनं प्रथमं प्रमाणप्रमेयादिसूत्रेण षोडशधा पदार्थान् विभज्य तत्परीक्षणेन चरितार्थम् । तत्र प्रमेयत्वस्य केवलान्वयिनः सर्वपदार्थसाधारणतया विभाजकत्वमनुपपद्यमानं मन्यमानेन कणादेन मुनिना कृत्स्नमेव प्रमेयजातं द्रव्यादिसप्तपदार्थपरिसंख्यानेनासंकीर्णं विभक्तम् । तत्र च सामान्यविशेषसमवायाभावान् वितथमेवापदार्थान् पदार्थयता तथाविधमेव चान्यदन्यदालपता ग्राह्यमगृह्णता त्याज्यं चात्यजता कणभक्षेण दूरमपथीकृतः शास्त्रपथ इति ब्रह्मसूत्रकारादिभिः प्रतिक्षिप्तो वैशेषिकः पक्षः । न्यायपक्षस्तु शङ्क्यमानोपसर्गोऽपि कथंचिद्व्याख्यानाधेयसंस्कारतया नात्यर्थपरिवर्जनीयः इति मन्यमानाः कतिपयसंस्कारसंस्कृतमिमं पक्षं परिगृह्य निबन्धान् निबबन्धुः पूर्वे केचिदाचार्याः । ते च निबन्धा एषु दिवसेषु नाम्नैव केवलमवशिष्यन्ते।तद्यथा—श्रीम-

न्नाथमुनिमिश्रप्रणीतं न्यायतत्त्वम्, श्रीमत्पराशरभट्टारककृतिस्तत्त्वरत्नाकरः, श्रीभगवद्यामुनाचार्याणामाचार्यैः श्रीमन्नाथमुनिचरणाश्रयाणां श्रीपुण्डरीकाक्षाणां शिष्यैश्च श्रीराममिश्रगुरुभिर्विरचितं विवरणं षडर्थसंक्षेपश्चेति ग्रन्थद्वयम्, अविदितप्रबन्धृव्यपदेशं न्यायसुदर्शनं प्रज्ञापरित्राणं चेति प्रबन्धयुगलम्, श्रीमन्नारायणमुनिविरचितत्वेनाचार्योपात्तं नाम्ना चानुदिष्टं किमपि प्रबन्धरत्नम्, अस्यैव च न्यायपरिशुद्धिप्रणेतुराचार्यस्याचार्येण मातुलेन च वादिहंसाम्बुवाहः इति प्रशस्तिनामाङ्कितेन आत्रेयरामानुजाचार्येण कृतं स्वप्रतिभाद्रविणनिक्षेपायमाणं न्यायकुलिशाभिधानं चेत्येते निबन्धाः न्यायपरिशुद्धिकृतैवाचार्येण तत्र तत्र भूयिष्ठमुदाह्रियन्ते। यदेव यावदेव चाचार्येण क्वचित् क्वचिदुदाहृतं वाक्यं वाक्यखण्डं वा, तदतिरिक्तं कियदपि टीकाकृतामपि दृष्टिविषयीभूतं नोपलभ्यते। अयमत्र हेतुः प्रतिभाति—आचार्यसंनिहितकालेष्वप्यनतिसंक्षेपविस्तररमणीयानि प्रस्फुटार्थानि नित्यप्रकाशान्याचार्यश्रीसूक्तिरत्नान्यवमृश्य रसास्वादवादिविजयशिष्यप्रवचनादिप्रवणेषु उपर्युपरि व्याख्यानादिप्रणयनैरविस्तृत्य शास्त्रं वितथमेवातिपातितकालेषु शिष्यप्रशिष्यवर्गेषु कुमारवेदान्ताचार्यादिषु, अतीते च

गणरात्रे कैश्चिदर्वाचीनैराविर्भूतैर्ग्रन्थकृद्भिरज्ञातपूर्ववृत्तान्तैर्यथाकथंचिद्व्याख्यानेन कश्चिदुपकारः कृत इति ॥

हन्त ! निःशेषक्षालिताखिलकलङ्कस्याप्यस्य श्रीभगवद्रामानुजसिद्धान्तस्येदमेकं शोचनीयं वैशसम्; यत् तावदाचार्यपदाभिषिक्तैरप्यर्वाचीनैर्बुधवरैः काणादगौतमीयादिसामान्यशास्त्रपरिश्रमेण व्ययितवयोभिरन्तिमे वयसि कथंचिदुपजातवेदान्ततृष्णैः शिष्यसंग्रहणकृतक्षणैरवश्योपादेयोपदेशश्रीभाष्यादिकतिपयग्रन्थग्रहणचरितार्थैरनादृताः प्राचामाचार्याणां वाग्विस्तरा एतर्हि श्रोतुमपि दुर्लभतां गमिताः । ईदृशोयं विद्यावधः कस्य वा विद्याव्यसनिनो न दुनोति मानसम्? । अथवा कृतं प्राचां प्रबन्धप्रणाशचिन्तनेन । अस्यैवाचार्यस्य वाङ्मधुनिष्यन्दो मुधैव कियान् न विस्रंसितः । सर्वतन्त्रस्वतन्त्राणामाचार्यचरणानां शताधिकाः प्रबन्धा हारविमलाः प्रसिद्धाः। संस्कृतप्राकृतद्राविडभाषाभिस्त्रैराशिकानि काव्यनाटकस्तोत्राणि, लोकशास्त्रव्यवहारानिरूढसंस्कृतव्यतिकीर्णद्राविडभाषामयानि च चतुर्थराशिनिविष्टानि लौकिकानामप्यनुग्राहकाणि परीक्षकाणामपि सुग्रहसांप्रदायिकतत्त्वाहितपुरुषार्थान्यादर्शविमलानि मणिप्रवालशब्दितानि।नेय-

तत्रान्यतया रहस्यसंज्ञितानि सिद्धान्तनिष्कर्षणैदंपराणि लोकश्रेयसे जातानि ग्रन्थजातानि। तत्र वेदान्ते तावत् तत्त्वटीका नाम श्रीभगवद्रामानुजमुनिवरविरचितस्य शारीरकमीमांसाभाष्यस्य विवृतिरपूर्वार्थविशेषविन्यासपरिभूषिता त्रैकाल्यसंभावनीयानामशेषाक्षेपाणामचलनिश्चयान् परिहारानुपदर्शयन्ती गङ्गेव गौरीगुरोरेतस्मादाचार्यवर्यादाविर्भूता। सा च प्रथमसूत्रमात्रमपि यावदसमग्रोपलब्धप्रचारा वेदान्तविद्याविचारकाङ्क्षिणां चिन्ताव्यसनायैव खण्डभूता परिदृश्यते। विचित्रायोधनाकुण्ठशक्तौ तेजस्विनि स्वां शक्तिं समग्रमदर्शयित्वैव नियतिवैयात्येनाकस्मादुपरतं योधरत्ने तटस्थदृष्टेः कस्य वा वीरधर्ममनुतिष्ठतो हृदयं न दूयेत। सोयमस्य निबन्धरत्नस्य लोपे दृष्टान्तः। केचिन्मन्येरन् आचार्यैरेव न समापूरितोयं ग्रन्थ इति, तदेतत् स्वोपमानेन सर्वत्र शक्तिपरिच्छेदं कलयतां प्रलपितमत्र न क्रमते। त्रिविधाः खलु लोके प्रबन्धकृतः—केचिद्गुरुकुलाचिरपरिश्रमैरनेकशः श्रुतान् यथाश्रुतमर्थान् पत्रेषु विनिवेश्य प्रकाशयन्तो लोकमनुगृह्णन्ति। अथेतरे, ये पुनर्जात्यैव स्फटिकावदातबुद्धयः सत्त्वविशेषाविर्भावनिस्तुषाशयाः स्वतःस्वान्तमुकुरतलस्फुटसंक्रान्तसर्वार्थप्रतिच्छन्दा अपि संप्रदायपरिरक्षणश्रद्धालुतया

गुरूपदेशदर्शितां पदवीमवर्जयन्तश्चित्तवण्टापथेषु समसमयसंचरदखिलप्रमाणतर्कगुरूपदेशसंप्रदायविशेषा एकहेलया भूयसोऽर्थानयत्नेन ग्रहीतुं प्रणेतुमप्यर्हन्ति । अन्ये तु निरन्तरभजनकृतप्रसदनेन भगवता सर्वेश्वरेण दूरप्रत्यूढप्रत्यूहविप्रुषो निःश्रेयसावधीनि कुशलजातान्यनुभवितुं निजचरणशरणानप्यनुभावयितुं चाकुण्ठशक्तयस्तृतीयकक्ष्यानिविष्टाः । त एते व्यासपराशरवाल्मीकिप्रमुखैर्महर्षिगणैरपि गणनीयानुभावा विलक्षणाः प्रबन्धकृतः; येषामेकप्रातिभासूत्रस्यूतानि प्रमेयरत्नानि पुनः पुनः परिशीलितान्यपि नवनवानीव प्रज्ञावतां हृदयेषु कमपि चमत्कारमावहन्ति न च कदाचित् पुराणचित्रवद् विच्छायानि भवन्ति । न्यायपरिशुद्धिकृदाचार्यस्तु द्वितीयतृतीययोरुभयोरपि कक्ष्ययोः हारावल्योरिव नायकमणिः प्रकाशत इति तत्त्वविदामपरोक्षम् । प्रकृतिसिद्धं च प्रक्रान्तस्यान्तगमनं शक्तिमताम् । लोकानुग्रहमात्रफला येषां सर्वाः प्रवृत्तयः, तादृशानामयत्ननिर्वर्तनीये लोकोपकारार्थे समारम्भे चिकीर्षितविच्छेदः कथमुपपद्यते ?। एवंगुणेन चाचार्यचूडामणिना शिष्यबुद्धिं प्रसादयितुमारब्धा कृतिरसमाप्य मध्ये अपविद्धा भवतीति को नु खलु प्रभाववेदी प्रतिपत्तुमर्हति ? । अपि च

" निखिलनिगमश्रेणीचूडापरिष्कृतिरूपिणी
निपुणमनसामाशासौधस्थलीषु निबध्यते ।
यतिपतिभुवो भाष्यस्यासौ यथाश्रतचिन्तित-
प्रवचनविधावष्टाविंशे जयध्वजपट्टिका ॥ "

इति स्वकृतस्य भाष्यप्रवचनस्य अष्टाविंश्यामावृत्तौ तत्त्वटीकानिबन्धप्रणयनमाचार्यस्तत्त्वटीकाप्रारम्भे स्वयमेव स्पष्टमाह । संकल्पसूर्योदयप्रस्तावनायां च—

" विंशत्यब्दे विश्रुतनानाविधविद्य-
स्त्रिंशद्वारं श्रावितशारीरकभाष्यः ।
श्रेयः श्रीमान् वेङ्कटनाथः श्रुतिपथ्यं
नाथप्रीत्यै नाटकमर्थ्यं व्यधितैतत् ॥ "

इति सूत्रधारवाचा शारीरकभाष्यप्रवचनं संकल्पसूर्योदयानिर्माणकाले त्रिंशद्वारकृतं प्रथयति । तदानीमेव त्रिंशद्वारं शारीरकभाष्यप्रवचनमासीद्यदि, ततः पश्चात् प्रवचनावृत्तयस्ततोपि हि भूयस्यो भवितुमर्हन्ति । कृष्णमिश्रसमागमकालो हि संकल्पसूर्योदयनिर्माणसमयः । ततश्चाष्टाविंश्यामावृत्तौ तत्त्वटीकानिर्माणं कृष्णमिश्रसमागमात् पूर्वतरं भवति । शतदूषण्याः समनन्तरं

तत्त्वटीका कृतेति च प्रतीयते । उक्तं हि स्वयमेवाचार्यैस्तत्त्वटीकां प्रक्रममाणैः—

"शातितः शतदूषण्यां शंकरादिमुधाग्रहः ।
शारीरकशरीरं तु व्यक्तमत्र प्रदर्श्यते ॥" इति ।

"श्रुतप्रकाशिका भूमौ येनादौ परिरक्षिता ।
प्रवर्तिता च पात्रेषु तस्मै श्रेष्ठाय मङ्गलम् ॥"

इति कुमारवेदान्ताचार्यकृतमङ्गलाशासनपरामर्शने श्रुतप्रकाशिकाप्रवचनतत्परत्वमाचार्याणां तत्त्वटीकापूरणविघाताय जातं स्यादिति चापातरमणीयम् । श्रुतप्रकाशिकाचार्यस्य हि म्लेच्छबलोपमर्दलग्नस्य निजगुरुसब्रह्मचारिणो मुमूर्षतः प्रार्थनया तद्ग्रन्थरक्षणप्रवचनयोरङ्गीकारेऽपि नैतावता स्वकीयं महीयांसं प्रबन्धप्रणयनप्रयत्नमाचार्यो वितथीकरिष्यति । न ह्यत्रत्यमपूर्वमर्थजातं ग्रन्थान्तरेण चरितार्थं भवति । तदिदमाचार्यग्रन्थे कृतश्रमाणां स्वत एव सुव्यक्तम् । इदानीमुपलभ्यमानपर्यन्तेऽपि तत्त्वटीकाग्रन्थखण्डे ये विषयाः प्रतिपाद्यन्ते, नैते श्रुतप्रकाशिकायामन्यत्र वा ग्रन्थान्तरे प्रतिपत्तुं सुलभाः । किंच स्वाचार्यैर्वादिहंसाम्बुवाहार्यैः प्रणीते विद्यमान एव हि न्यायकुलिशाख्ये न्यायनिबन्धर-

त्वे न्यायपरिशुद्धिमाचार्यः स्वयं निबबन्ध । अवश्यवक्तव्येषु चार्थेषु जोषंभावः कथंचिदपि शास्त्राचार्यतायाः सदृशो न भवति ! न च नवनवार्थाविष्करणमर्वाचां प्राचीनाचार्यपरिभवाय । अपि च,

" निखिलनिगमश्रेणीचूडापरिष्कृतिरूपिणी
निपुणमनसामाशासौधस्थलीषु निबध्यते ।"

इति प्रबन्धोपक्रमप्रतिज्ञानमेव प्रदर्शयति ग्रन्थान्तरैरचरितार्थस्य सर्ववेदान्तार्थसंस्कारस्य महामतिभिरपि .सर्वज्ञसकाशात् शुश्रूषितस्य प्रतिपादनार्थमपूर्वायाः कृतेः समारम्भ इति । स कथं न परिपूर्येत ? । किंच निजनिबन्धस्य श्रुतप्रकाशिकारक्षणाङ्गीकारसमय एव लब्धप्रसरतामनुस्मृत्य परकीयग्रन्थप्रवचनमङ्गीकृतमाचार्यैरिति शक्यमभ्यूहितुम् । तथाच सति तत्त्वटीकाग्रन्थलोपनिदानमर्वाचामाचार्याणां तत्रापरिशीलनमेव, न तु ग्रन्थापरिसमाप्तिः । यथाहि न्यायसिद्धाञ्जनमपि जडद्रव्यपरिच्छेदेनैव पर्यवसितं सांप्रतं परिदृश्यते, अद्रव्यपरिच्छेदस्तु पतित एव । अशक्यं च तत्पूरणमन्यैः । इत्थममुमर्थं श्रीरङ्गरामानुजगुरुरेव न्यायसिद्धाञ्जनव्याख्याने

" न क्वाप्यतः परमदस्यत कोशशेष-

स्तच्छेषपूरणकृतिः परिहासहेतुः ।

ज्ञातव्यमन्यदपि तैर्निरणायि सम्य-

ग्ग्रन्थान्तरेष्विति न किंचिदिहास्ति चिन्त्यम् ॥ "

इति निगमयन्निवेदयति । शतदूषण्यपि हि न समग्रा दृश्यते । षट्षष्टिरेव वादा लोके प्रचरन्ति । शेषे तु मिथ्यैव किमप्यैतिह्यं कल्पयित्वा कतिपये प्रजल्पन्ति । यत्तावत् द्वैतमतखण्डनपरः शेषो ग्रन्थः मध्वमतस्थेन केनचिद्यतिना भिक्षामटता सविनयमुपसृत्य प्रार्थितोयमाचार्यः तं तस्य भिक्षार्थे प्रायच्छिदिति, तदपि न विचारक्षमम् । न ह्याचार्यग्रन्थेषु क्वाचिदपि मध्वमतं निरस्यते । तत्त्वविप्लवाभावात्, अवान्तरेषु चार्थेषु नैयायिकवैशेषिकादिप्रतिपादितस्यैव द्वैतस्यानुवादात्, अनतिप्रचुरतया तस्य मतस्य लोकविप्लवप्रसंगाभावाच्चानास्थैवाचार्याणां तत्र स्यात् । अतश्चतुस्त्रिंशद्वादा मध्वमतखण्डनपरा इति किंवदन्तीमात्रमेतत् । शतदूषणी च शंकरादिकृतसूत्रव्याख्यानादिनिरासार्थमेव प्रवृत्तेति च तद्ग्रन्थमुख एव स्फुटीभवति । तत्र हि—

“ प्राचीमुपेत्य पदवीं यतिराजदृष्टां
तत्संनिकृष्टमपि वा मतमाश्रयन्तः ।
प्राज्ञा यथोदितमिदं शुकवत् पठन्तः
प्रच्छन्नबौद्धविजये परितो यतध्वम् ॥ ”

इति प्रतिश्रुतम् । अत्र ‘ तत्संनिकृष्टमपि वा मतमाश्रयन्तः ’ इत्यनेन द्वैतिनः स्वपक्षीक्रियन्ते । अद्वैतखण्डनमेव च ग्रन्थप्रवृत्तिप्रयोजनमिति च दर्शितम् । तथा च—विद्यारण्याक्षोभ्यमुनिविवादे निर्णयं ब्रुवद्भिराचार्यैः

“ असिना तत्त्वमसिना परजीवप्रभेदिना ।
विद्यारण्यमहारण्यमक्षोभ्यमुनिराच्छिनत् ॥ ”

इत्युक्तम् ।‘ शातितः शतदूषण्यां शंकरादिमुधाग्रहः ।’ इत्यत्र तु शंकरादीत्यादिपदं यादवभास्करयोः संग्रहायेति स्थितम् । तस्मात् समग्रग्रन्थादर्शनमर्वाचामाचार्याणां प्रवचनविच्छेदनिबन्धनं प्रबन्धलोपहेतुरिति स्पष्टमेतत् ॥

अत्र प्रसक्तानुप्रसक्तमाचार्यस्य कृष्णमिश्रसमागमचरितं किंचिदुपन्यस्यते—कृष्णमिश्रो हि गौडदेशीयः पण्डितचूडामणिः सर्वासु विद्यासु कलासु च सविशेषकृतश्रमः कविश्च ब्रह्माद्वैत

सिद्धन्तमातिष्ठमानो वादकुतूहलितया सर्वा दिशः पर्यटन् जितकाशी क्रमेण दक्षिणां दिशमाचक्राम। तत्र श्रीरङ्गं दिव्यक्षेत्रं विदुषामावासमाकर्ण्य देवसेवापदेशेन वादसमरमर्थयमानः श्रीरङ्गराजस्य भवगतः प्रासादमाससाद। तदानीं तत्र भाषामयीर्गाथाः सरागतालं गीयमाना निशम्य तत्कर्तॄणां च कवीनां वर्णावराणामपि प्रतिमास्तस्मिन् देवालये देवोपचारैराराध्यमाना विदित्वा तत्र सेवासमवेतान् ज्ञानवृद्धान् श्रीवैष्णवानामन्त्र्य 'भोः प्राज्ञाः, भवतामनेनापभ्रंशपाठेन वर्णावरपूजनेन च दूरापोढं वैष्णवं तेजः। किमनेनाराधनेन? अन्यथाकृतमकृतं हि भवति' इति साक्षेपं पप्रच्छ। यदा तैर्मिलितैरपि न किंचिदाक्षेपसदृशमुत्तरं प्रतिपन्नं, तदा तदातनाय तद्देशाधिपतये तमर्थमावेद्य,प्रतिष्ठाप्रभृति सर्व एवालयसंस्कारः कार्यः प्रत्यग्र एव इति च नियम्य तं दिव्यालयं गाढघटितार्गलद्वारं परित्यक्ताशेषपूजोत्सवं च कारयामास। लोकाचार्यप्रभृतयश्च बहवस्तत्र दर्शनगुरवस्तादृशं वैशसमाचिन्तितोपनतमनुस्मृत्य दुरन्ते दुःखसागरे निमग्नास्तं च प्रतिवादिनं सर्वविद्याविशारदं वादाहवशूरमप्रकम्प्यमाकलयन्तः सभामभिनवां कामपि संगमय्य तस्यानर्थस्य किंचि

दपि प्रतिविधानं चिन्तयामासुः । तस्मिन् महति सदसि विदुषां संप्रदायाचार्यः श्रीमान् लोकाचार्यः सर्वेषां सभासदामवधेयवचनः समर्थामभ्यर्हितां वाचमाददे—"भोः भागवतप्रधानाः, बलवन्तं परिपन्थिनं पराङ्मुखीकर्तुमुपायः कश्चिदत्र मे प्रतिभाति । स तावदुच्यमानो भवद्भिरनुमन्यताम् । अस्ति किल काञ्च्यां नगर्यां वेङ्कटनाथार्यो नाम विदुषां प्रथमः । स हि वृषशैलनाथस्य घण्टांश एवावतीर्णः इति तत्त्वविदां ग्रहणम् । सोयं पञ्चवर्षदेशीयः शिशुरेव सन् निजमातुलेन वादिहंसाम्बुवाहेनात्रेयरामानुजाचार्येण शारीरकभाष्यग्रहणाय वरदगुरुसकाशं गच्छता प्रियभागिनेयेन नीतस्तत्र भाष्यविषये प्रसक्तान् बहून् संदेहशृङ्खलाग्रन्थीन् विस्रंसयंस्तया तत्र समवेतया प्रज्ञावृद्धपरिषदा अपूर्वप्रसादविस्मयचिंतितचित्तया सबहुमानमवलोकितः श्रीमता च वरदगुरुणा श्रीभगवद्रामानुजसिद्धान्तस्य दैवात् संप्रति संजातमवलम्बनमिति बद्धाश्वासेन,

'प्रतिष्ठापितवेदान्तः प्रतिक्षिप्तबहिर्मतः ।
भूयास्त्रैविद्यमान्यस्त्वं भूरिकल्याणभाजनम् ॥'

इत्याशिषं प्रयुञ्जानेन 'अस्य कुमारस्य स्वतः प्रतिभातसम-

स्तशास्त्रार्थसारस्य विद्यासंस्कारमात्रफलो गुरूपदेशो भविष्यति । न तु ज्ञाने कश्चिदपि शक्तिलेश आधेयो भवति । भगवानपि हि देवकीनन्दनः विद्याग्रहणाय सांदीपिनेराचार्यस्य सकाशे गुरुकुलवासमग्रहीत् । किं चास्य शैशव एवायं प्रज्ञाप्रकर्षो दाशरथेरिव विक्रमातिशयो जन्मसिद्धः । नासौ पुरुषान्तरदृष्टिविषयं प्रापयितुं युक्तम् । साभ्यसूयाः सविस्माया वा दृशो नास्मिन् बालवयसि पतितुमर्हन्ति । दृष्टिदोषैर्हि विषानलैरिव प्रसरद्भिस्तरव इवावलीढाः कति नाम महागुणाः पुरुषाः स्वगुणैर्लोकमनुपकृत्यैवास्तं गताः । भवानेवामुं सर्वशास्त्रेषु कृतप्रज्ञं कर्तुमर्हति । श्रीभगवद्रामानुजसिद्धान्तस्यैष जयध्वजः समुच्छ्रीयताम्' इत्यादिश्य शिशुरसौ निजमातुले वादिहंसाम्बुदाचार्ये न्यासीकृतः ॥

अथासौ वयसा विंशतिवर्षदेशीय एव सन् सर्वतोमुखप्रसृतप्रबोधतया परेषामनभिभवनीयः संवृत्तः । एवमक्षय्यप्रतिभाद्रविणेन सर्वेष्वपि च तन्त्रेषु निरामयं पन्थानमवगन्तुं प्रसादयितुं चालंकर्मीणेन चाचार्येण सार्धं कदाचित् काञ्चीनगरे देवदेवस्य भगवतः श्रीदेवराजस्य वैशाखमासिके यात्रामहोत्सवे विद्वत्संवादकुतूहलितया समागतः सर्वपथीनवैदुषीविभवः प्रबन्धरत्नप्रणेता चाखिलशास्त्रेषु

विद्यारण्य इति कृतप्रशस्तिनामधेयो माधवाचार्यो नाम वेदभाष्यकृत् वादाहवे लग्नो निरङ्कुशनिशिततर्कशरासारवर्षिणःआचार्यस्याग्रतः प्रत्यवस्थातुमक्षमो विस्मयबहुमानभरितमना विजयनगरं प्रयातः स्वशिष्यस्य राज्ञस्तमर्थं यथावृत्तमावेद्य तथाविधविद्वद्रत्नदर्शनोत्कण्ठात्वरितस्य प्रभोः प्रार्थनया छत्रचामरप्रभृतिसमस्तराजपरिबर्हपरिबृंहितं राजौपवाह्यपुरःसरं प्रधानसचिवहस्तार्पितसबहुमानसमाह्वानलेखं च चतुरङ्गबलं प्रणीय प्रार्थितो वैराग्यपञ्चकं तस्य प्रत्युत्तरयांचकार । तेन च माधवाचार्येण स्वीये सर्वदर्शनसंग्रहे रामानुजदर्शनमुपक्षिपता—'तदुक्तं वेङ्कटनाथेन तत्त्वमुक्ताककलापे' इत्युपक्रम्य,

'द्रव्याद्रव्यप्रभेदान्मितमुभयविधं तद्विदस्तत्त्वमाहु-
र्द्रव्यं द्वेधा विभक्तं जडमजडमिति प्राच्यमव्यक्तकालौ ।
अन्त्यं प्रत्यक् पराक् च प्रथममुभयथा तत्र जीवेशभेदा-
न्नित्या भूतिर्मतिश्चेत्यपरमपि जडामादिमां केचिदाहुः ॥'

इति श्लोकमुदाहरता चातिभूमिगतस्तस्मिन् संभावनाविशेषः प्रदर्शितः । न ह्यन्यथा सत्सु प्राचां निबन्धेषु समानकालिकस्य ग्रन्थादुदाहरणमुपादित्सन्ते कृतप्रज्ञाः ॥

तदेवं सर्वत्राकुण्ठप्रज्ञो वेङ्कटनाथार्य एवेमं विद्यागर्वदुर्विदग्धं कृष्णामिश्रमभिभवितुं क्षमः। इत्येवं वदन्नेवासावाचार्यः साधुवादमुखरमुखैः सामाजिकैरभिनन्दितवाक्योनुपदं संभावनाक्षरोपक्रमं प्रदर्शितविषयगौरवं विलिख्य लेखमेकं दूतहस्तेनाचार्यसकाशं विससर्ज। स च भगवदाराधनप्रतिरोधनखेदेन प्रतिपन्नदूत्यः कश्चिच्छ्रीवैष्णव एव रात्रिंदिवमविश्रान्तगतिर्दीर्घमप्यध्वानं कैश्चिदेवाहोभिः कथंचिदतिक्रम्य काञ्चीपुरमुपसेदिवानाचार्यरचणानामभिवन्द्य चरणकमले लेखमुपदर्शयामास। वाचितलेखश्चानुपदमाचार्यः श्रीरङ्गनेतुराराधनव्यतिक्रममसहमानो दुःखदुःखेन कालक्षेपमपि प्रकरणावसानाद्यप्रतीक्षया मध्य एवावस्थाप्य योगभारपेटकेनान्तःशायितहयग्रीवार्चामूर्तिना स्कन्धासञ्जितेन यावद्रङ्गनाथसमाराधनं कृतोपवाससंकल्पः प्रतस्थे। तथा तस्य श्रीरङ्गराजचरणकमलैकलग्नमनसो गत्वरस्य त्वराविशेषपुनरुक्तमार्गायामेषु अलक्षितवातातपदोषेषु अनाकलितकण्टकशर्करादिवेधव्यथेषु दूरीकृतक्षुत्तृट्परिश्रमप्रतिसंधानेषु गच्छत्सु केषुचिद्वासरेषु अस्तमुपगते दिननाथे भगवतः सर्वगोचरातीतस्यापि भूदेवीप्रणयपरिग्रहार्थमिव स्वयं व्यक्तिमुपेयुषः स्वेच्छावराहस्य सिद्धक्षेत्रभूतं श्रीमुष्णमुपगम्य सायं स-

ध्यामुपास्य कृतविमानाभिवन्दनो रात्रौ योगसंकल्पौपयिकं स्थानम-नुचिन्तयन् धान्यापणमेव स्वतः शुद्धमनपेक्षितशोधनं च शास्त्र-दृष्टया दृष्ट्वा तदापणिकेन चाकृतिविशेषप्रत्ययारूढप्रश्रयातिशयेना-चार्यपरिचिर्यया कृतार्थमात्मानं चिकीर्षता कृत्स्नमेवापणमाचार्यसा-त्कृत्य तत्रावस्थातुं प्रार्थितः स्कन्धादवरोपितं योगभारपेटकमुच्चैस्तत्र क्वचिन्नागदन्तके समवलम्ब्य संकल्पितयोगः श्रीरङ्गसंगतान्तरङ्गः शून्यमिव शरीरं शयनतले निदधे। वणिग्वरश्चासौ आचार्य-चरणाभ्यर्णन्यस्तमस्तकस्तादृशेनात्मनो भागधेयेनाप्रतीक्षितलब्धे-न हर्षविस्मयसंप्लवशबलीकृतात्मा निद्रामप्राप्तोपि क्षीरोदफेन-पिण्डपाण्डुरं महोत्सेधपरिणाहं जङ्गमरजतशैलशृङ्गशङ्कावहं वा-जिराजमापणस्थान् धान्यसंचयांश्चरन्तमुत्स्वप्नायमान इव ददर्श। आचार्यसंबन्धिनमिवाकस्मात् तमवगच्छन् पण्यद्रव्यविलोपकदर्थि-तोसौ 'भगवन्, बधानैतदचिरेणाश्वरत्नम्। यान्यत्र विक्र-याय निहितानि माषमुद्गयवमसूरगोधूमाढकादीनि धान्य-जातानि, तानि सर्वाण्यस्य वाजिराजस्यैकग्रासग्रहार्थमपि न पर्याप्तानि। काममेतदसुलभं सुकृतम्, यदेवंविधेन महता सत्त्वेन मादृशस्यैतत् संभावनम्। तथाप्यात्मीयां वृत्तिमभिरक्षितुं

स एष मे संभ्रमः । प्रकृतिर्हि दुरपह्नवा' इत्यादि बहुविधं सविनयं निवेदयामास । आचार्यस्तु प्रसन्नस्मेरेण वदनकमलेन तं प्रत्युवाच—'श्रेष्ठिश्रेष्ठ, अनेनाश्वरत्नेन घासग्राहिणा न किंचिदपि ते पण्यं विलुप्तं मानतो न्यूनं वा भविष्यति । दिव्यं ह्येतदश्वरत्नम् । यत्र यत्रानेन प्रोथन्यासः क्रियते तत्तदशेषमक्षय्यं ते पण्यं भविष्यति । व्यपैतु ते दूरतो भयम् । बध्यते तु मया क्षणादयमश्वः । क्षीरमात्रं तु कियदप्युपहर्तुमर्हसि' इति । तद्वचनश्रवणप्रतीतेन तेन श्रेष्ठिना सत्वरोपहृतं पयो निवेदितः स भगवान् हयवदनस्तत्क्षणमदृश्यो बभूव । आचार्यश्चानुपदं यामशेषामालक्ष्य त्रियामां यथापूर्वमंसावलम्बितयोगभारपेटकः प्रतस्थे । ततः प्रभृति दिने दिने वर्धमानश्रीः स श्रेष्ठी स्वजातिमहत्तरतां जग्राह ॥

ये तु श्रीरङ्गवासिनः संप्रदायगुरवस्ते सर्वे चातका इव जलदागमं श्रीदेशिकाभिगमं प्रतीक्षमाणाश्चिरोत्कण्ठिताश्च सीमान्ते क्रोशमात्रे ततश्च दूरतरे वर्त्मनि प्रेषितानां दत्तसंज्ञाचिह्नानां शिष्याणामभिज्ञानसंकेतग्रहणव्यापृतालोकास्तैश्च क्वचित् क्वचिदुन्नतस्थानावस्थितैर्दूरोद्धूतेषु चन्द्रमण्डलपाण्डुरेषु उत्तरीयाञ्चले

सप्रमोदगृहीतपूर्णकलशोपहाराः प्रत्युद्गम्याचार्यमाचार्येण चाभिजनवयोविज्ञानसदृशं संभावितास्तमिमं वासगृहमगमयन् ॥

अथाचार्याभ्यागममावेदितस्य देशाधिपतेरादेशेन संगतायां यथास्थानावस्थितसभिकप्राश्निकादिपारिकार्मितायां महत्यां परिषदि जीगीषाकृतनिश्चयतया प्रथमतरमेव कृतासनपरिग्रहः कृष्णमिश्रो यथाकालानुष्ठितसमस्ताह्निकक्रियाकलापमूर्ध्वपुण्ड्रश्रीविशेषपरिमण्डितगात्रमपूर्वदर्शनेन च ब्रह्मतेजसाभिभूतान्यतेजसं प्रसन्नपावनप्रगल्भया वदनश्रियैव स्फुटीकृतज्ञानभक्तिवैराग्यप्रकर्षमाचार्यं सभां प्रविशन्तमवलोक्यानाकलितमाहिमा 'आकारो ह्रस्वः' इति सस्मितां वाचं विसृजन्नेवाचार्येण प्रत्युत्पन्नमतिना तत्क्षणमेवं 'कथमत्र ह्रस्वदीर्घविभागोपि विपर्यवसितः, दीर्घ आकार इति स्थितमेतत् । हन्तेयं शास्त्रज्ञैरेव शास्त्रमर्यादा दूरापवर्जिता' इति प्रत्युक्तः तदुपरि सदृशमुत्तरमप्रतिपद्यमानस्तत्प्रथमपराजयविलक्षमीलिताक्षनताननः कथमपि यत्नोदीरितवाक्प्रसरः स्वं वादमुपचिक्षेप। आचार्यस्तु समग्रप्रमाणतर्कपरिबृंहितेन प्रदर्शितपूर्वकक्ष्यादोषशतेना परकक्ष्यारोहेण जग्रासेव प्रतिवादिनो वादमेकपदे । अथ

मिश्रोपि कक्ष्यान्तरमारुरोह । पूर्ववदेवाचार्यः सर्वमेव तद्वादग्रहमन्तरयामास ॥

एवमस्खलितप्रतिभाप्रभावयोरुभयोरपि तर्कतरङ्गैरुत्तरङ्गैस्त्वङ्गद्भिर्मिथः प्रतिघातकुण्ठितप्रसरैस्त्रिसन्ध्यवर्जमाक्रान्तसर्वकाले रामरावणयुद्धवत् पश्यतां हर्षविस्मयदायिनि वर्तमाने वादाहवे वादलीलाकुतूहलिना चाचार्येण निःशेषमनिरुन्धता सोपेक्षमतिवाहितेषु केषुचिद्दिनेषु भगवदाराधनप्रतिरोधस्मरणप्रतिबुद्धतेजसा प्रतिवादिनस्तादृशीं शक्तिं देवताप्रसादागतामवधारयता च निजहृत्पद्मसिंहासनाध्यासिनि वाजिवदने परे ज्योतिषि क्षणाचित्तार्पणसंगृहीताभिनवप्रबोधप्रसादेन नारायणास्त्रमिवाप्रतिपक्षमुत्तरपक्षमाददानेन सपदि प्रशान्तसंरम्भः कृतः प्रतिवादी । तथा च पराजितोसौ यावत्कौशलव्ययितानिःशेषिततर्कास्त्रवर्षः शरन्मेघपरिलघुर्विलक्षावनतमुखः कंचित्कालं मौनेनावतस्थे । तत्र स्वपक्षे जयकोलाहलाध्मातविजृम्भिते सत्यपि आचार्यो विनयविनीतो जलधिरिव मर्यादां नातिचक्राम । परपक्षस्तु पराजयावसादाद् दीनवदनो बभूव ॥

अथ कथमपि विवेचनाप्रतिलब्धावष्टम्भो मिश्रवरः परिषद-

मामन्योवाच—'भो हंसा इव क्षीरनीरयोर्गुणदोषयोर्विवेचने कृतलक्षणाः एकतरपक्षपातिनो मध्यस्थाश्च सभासदः, श्रूयतामवहितैर्ममेदं किमप्यावेदनमत्रभवद्भिः । अनेन पराजयेन मामवमतमसमर्थमन्ये मन्येरन् , न तु ये विद्याविशारदा वादकुशलाश्च । तेषामत्र तत्त्वं न परोक्षं भविष्यति । अन्यथा हि भगवतो विघ्नराजस्य प्रभाव एव हि निरस्तातिशयः स्यात् ; यत्प्रसादविमलोदितप्रज्ञाप्रभापरिक्षेपं न मां सदसि प्रेक्षितुमपि कश्चिदलम् । आचार्यवर्यस्त्वसावसंशयं देवदेव एव मूर्त्यन्तरेणोपगतो वाजिवदनः, यस्येतरे सर्वशो देवा भीतभीताः शासनानुवर्तिनः स्वे स्वे कर्मण्यप्रमत्ताः प्रवर्तन्ते । तदिदानीं भार्गवस्येव रघुसिंहादस्मात् कविकथकसिंहादुपनतोयमुपचयो मे नापचयः' इत्येवमुदीरयन् सभ्यैश्च साधुवादमुखरमुखैरभिनन्दितवचनः श्रीमता चानभिव्यञ्जितनिजविजयोत्कर्षेणाचार्यवर्येण विद्वत्सौहार्दं दर्शितवता सविशेषबहुमतस्तत्रैव कंचित् कालमुवास ॥

अथ चाचार्यनिदेशप्रवर्तितैर्महाप्रभावैर्गृहमुनिभिर्ऋत्विग्भिर्यथाशास्त्रोपपादितसमग्रपरिकरे महाविभवे श्रीरङ्गराजसंप्रोक्षणे गन्धतैलगन्धापूरितदिगन्तरे दधिक्षीरमधुसर्पिरभिवर्षपिच्छिलप्राङ्गणे

अनेकविधफलपुष्परसावसेकस्निग्धपरिभागे कनकापगाजलापूरितमणिहेमकुम्भापवर्जितधारासहस्रदर्शिताकालवर्षागमे च निर्वृत्ते महाभिषेके सर्वहविःसारभागिनि साक्षादिव हविर्ग्रहणाय प्रसारितभुजे भगवति रङ्गाधिराजे दूरोन्नद्धज्वालामालिनि प्रदक्षिणप्रज्वलनपारिगृहीतपूर्णाहुतौ हुताशने तत्क्षणं विद्युत्पुञ्जपिञ्जरतेजोविशेषप्रत्यस्तबहिरन्तस्तमिस्रं नित्यमङ्गलैकरूपं भगवन्तं श्रीरङ्गनाथं सुधाकरमिव नवाभ्युदितं त्यक्तान्यविषयेषु चकोरकेष्विव निभृतमापिबत्सु लोकलोचनेषु प्राप्ते च तीर्थप्रसादपरिग्रहावसरे स मिश्रमणिराचार्यं सविनयमुवाच—'आर्यवर्य, अस्मिंस्तीर्थप्रसादपरिग्रहे योग्यताक्रमोऽनुविधेयः। अन्यथा ह्यपूज्यपूजनं पूज्यपूजनत्यागश्च स्याताम्। भवत्सकाशादेव च ममायमिदंप्रथमः पराजयः। नाहमन्यस्य कस्यचिदपि प्रत्यनन्तरो भवितुमर्हामि। अतो भवति प्रसादार्पणेन संभाविते ममैव न्याय्यं संभावनम्। शेषास्तु पश्चादेव यथार्हमर्हणां प्राप्स्यन्ति' इति। आचार्यस्तु सत्सु भागवतेषु ख्यातिलाभपूजाविमुखतया अग्रपूजां ग्रहीतुमनिच्छन् मिश्रप्रार्थनामप्यप्रत्याचक्षाणः 'ओम्' इति प्रतिगृह्य पश्चान्मिश्रमपि यथाप्रार्थनमनन्तरसंभावनीयमादिदेश। मिश्रस्तु

कथमत्रापि जितोस्मि ' इति प्रश्रयमनुशिक्षित इव विगलितावलेपः प्रतिययौ ॥

एवं दुरीकृतसमस्तप्रत्यूहं महाविभवमनुभूयाराधनं प्रसाद विशेषप्रफुल्लवदनारविन्देन भगवता रङ्गपतिना प्रदिष्टां संनिहितैश्च विद्वद्वरेण्यैरन्यैराचार्यैरनुमोदितां वेदान्ताचार्यसंज्ञां शिरसा प्रत्याददानः श्रीरङ्गनाथकीप्रसादकृतसर्वतन्त्रस्वतन्त्राभिधानश्च भूयो भूयोपि स्वयमुपनमन्तीभिरर्हणाभिर्विनयसंपदमेवातिशायिनीं भूषाश्रियमिव श्रयन् निवासमभिययौ ॥

अथ च भूयः कृष्णामिश्रः स्वेन काव्यकौशलेनाचार्यं प्रीणयिष्यन् स्वकृतिं प्रबोधचन्द्रोदयं नामाद्वैतवेदान्तसिद्धान्तगर्भं पञ्चाङ्कपरिच्छिन्नं प्रकरणपरिगणितं रूपकमाचार्यायादर्शयत् । तत्रापि तन्मतानिवेशमसमञ्जसं जनमनोव्यामोहनफलमवश्यनिरसनीयमाकलयन्नाचार्यवर्यस्तादृशीमेव तदात्वप्रणीतां नाम्नैव दर्शितातिशयां श्रीभगवद्रामानुजसिद्धान्तवैजयन्तीं संकल्पसूर्योदय इति कृतान्वर्थव्यपदेशां स्वकृतिं दर्शयामास । तस्याश्च नामश्रवणेन शब्दार्थगुम्फगाम्भीर्य दर्शनेन च विस्मयमारूढोसौ मिश्रवरो महागज इव शरदागमे विमुक्तमदसर्वस्वः स्वमेव देशं प्रतिजगाम ॥

अथ कदाचिद्वादिकेसरिनामा लोकाचार्यावरजः श्रीवैष्णव एव सन् आशुकवितामदाध्मातचेताः कवितार्किकसिंहस्यानाकलितमहिमार्णवगाम्भीर्यो जयार्जनत्वराविशेषमन्दीकृतविवेकः कस्मिंश्चित् प्रदोषे श्रीरङ्गनाथविग्रहशोभासमाकृष्टहृदयमाचार्यवर्यमभिगम्य ' अयि भोः श्रीमन् वेदान्ताचार्य, मयि स्थिते वश्यवाचि कविचूडामणौ वादिकेसरिव्यपदेशव्यपदिष्टे कथं कवितार्किकसिंहबिरुदं भवानर्हति । तस्मादस्मिन्नेवैकरात्रे श्लोकसहस्रं निर्माय यतर एवावयोः स्वं बिरुदमवितथं करिष्यति स एव संभावनामर्हति ; नेतरः । यथेच्छं च विषयो ग्राह्यः । अहमस्यैव भगवतो रङ्गाधिराजस्य पदकमलमात्रमधिकृत्य सहस्रं श्लोकाननयैव रात्र्या परिसमाप्य सूर्योदये दृष्टिविषयमुपनेष्यामि ' इति सावष्टम्भमुदैरयत् । आचार्यस्तु साटोपामपि तस्य गिरं सगौरवमूरीकृत्य ' आर्य, पदकमलस्याप्यधस्तात् पादुकामधिकृत्य यथाशक्ति वाचं ग्रथितुमुत्सहे ' इति सप्रश्रयमेवोत्तरं दत्वा स्वमावसथं जगाम । स च वादिकेसरी कविवादिकेसरिणः श्रीमदाचार्यस्य नामतः कविशब्दमाक्षिप्तं निजे च नामनि योजितं स्वात्मनैव निश्चित्य मनोराज्यमनुभवन् सानुचरः स्वभवनं गत्वा रभसावसितप्रत्य-

वसानकर्मा नातिदूरदत्तासनैश्च परितः परिवृतः शिष्यैः सुहृद्भिश्च दर्शितसंभ्रमातिरेकः पदकमलसहस्रं लेखयन् कथंचित् प्रणीतैस्त्रिचतुरैः श्लोकशतैरवसितप्रतिभासर्वस्वः प्रतिश्रुतायाः सहस्रसंख्यायाः सीमान्तमपि स्प्रष्टुमपारयन् प्रजागरेण प्रबन्धानवसानव्यसनेन च विक्षुभिताक्ष एव तामशेषां रजनीमयापयत्। अन्तरा चान्तरा दूतप्रेषणैः कविकथकसिंहगुरुमनारब्धप्रातिश्रवनिर्वहणमेव सुखसुप्तमाज्ञाय 'वरमकिंचित्कराद्यत्किंचित्करः' इति न्यायमनुस्मरन् अपरिहीणात्मोत्कर्षगणनः प्रत्यूषे कृतोत्थानः जयश्रीपरिजिघृक्षासंक्षिप्तसमस्तप्राभातिकसमुदाचारो नागेन्द्र इव मदमीलितार्धनयनः श्रीरङ्गप्रासादमुपससाद। आचार्यवर्यस्तु पाञ्चकालिककृत्यानुष्ठानेषु किंचिदप्यननुभूतप्रस्खलनतया व्यतिक्रान्ते प्रदोषसमये योगं संकल्प्य भगवदङ्घ्रिकमलमधुरसास्वादनिष्पन्दमनोमधुकरो यथासुखं संविवेश। प्रत्यासन्ने च ब्राह्मे मुहूर्ते तेनैव भगवता श्रीहयग्रीवमूर्तिना स्वां पादुकामपुनरुक्तनवाभ्युदयेन श्लोकसहस्रेण प्रस्फुटीक्रियमाणगुणकलापां श्रोतुमुत्सुकेनेवाग्रतस्तस्थुषा प्रतिश्रुतानिर्वहणं प्राप्तकालमनुबोधितः शयनादुत्थितमात्र एव प्रातःस्मरणीयप्रसिद्धश्लोकानुसंधानादपि भूयिष्ठवेगाति-

शयोच्चारितेनानालक्षितसंभ्रमेणाश्रमवाहिना साग्रेण श्लोकसहस्रेण भगवत्पादुकासेवां वाचिकीं परिसमापयामास । तत् समग्रमपरिलुप्तपदपादाक्षरादिनिवेशमनुपदं पत्रार्पितं चकार श्रीभगवांस्तु-रङ्गवदनः । प्रातः श्रीरङ्गमण्डपमुपगताभ्यामाचार्येण वादिकेसरिणा चोभाभ्यां दर्शितयोरुभयोः प्रबन्धयोरर्थगौरवेण प्रतिश्रुताधिकसंख्यादर्शनेन चानिच्छतामपि श्लाघाघूर्णमानानि बलादिव शिरांसि कुर्वाणायामाचार्यकृतौ प्रथममेव कृष्णमिश्रसंघर्षविद्रुतवादिव्यपदेशस्याशामोदकायितकविशब्दस्य च वादिकेसरिणो गरीयसि कृतागसः सभासदामवज्ञया नामैवास्तमितमिवासीत्॥

एवमेकैकशोपि महते विस्मयाय कल्पमानमपास्तसमस्तपरिच्छेदं वाक्पतिरपि निगमान्तगुरोश्चरितमशेषेण वर्णयितुं न प्रभविष्यति । का कथा परिच्छिन्नप्रज्ञस्याल्पतरवाग्विभवस्य मादृशस्य जनस्य । न चात्र चरिते किंचिदपि पक्षपातेन परपरिस्पर्धया वा कल्पितमिति चिन्तयितुं युज्यते । एषु दिवसेषूपलभ्यमाना विप्लुतशेषा अपि ह्याचार्यप्रबन्धाः परिशील्यमानाः सर्वमेवाचार्यचरितं परमार्थमेवावेदयन्तः सर्वातिरिक्तं प्रकाशन्ते । किंचिदत्राचार्यचरणैरेवानुदर्शितं चरितानुबद्धमुदाह्रियते । यथाहि—

" विश्वास्मिम् नामरूपाण्यनुविहितवता तेन देवेन दत्तां वेदान्ताचार्यसंज्ञामवहितबद्धवित्सार्थमन्वर्थयामि ।" इत्यधिकरणसारावल्यां श्रीरङ्गराजेनैव साक्षात् स्वस्य वेदान्ताचार्यपदार्पणं व्यक्तमुक्तम् ॥

श्रीरङ्गात् काञ्चिपुरप्रस्थाने च मार्गवशात् श्रीमदहीन्द्रपुरक्षेत्रमुपगतः श्रीदेवनाथं मङ्गलाशासनेन सकृत् संभाव्य प्रस्थित आचार्यस्तां रात्रिं पिनाकिनीतटपुलिने कृतशय्यापरिग्रहस्तस्मिन्नेव निशान्ते स्वप्नदर्शितात्मना देवदेवेन श्रीदेवनाथेन स्वसमीपे चिरावस्थानं स्वस्य च निगमकल्पैः सूक्तिकुसुमैरभ्यर्चनं कर्तव्यमकृतं निवेदितः प्रतिनिवृत्य तथाकरोत् । अयमपि वृत्तान्त आचार्येण स्वकृतौ देवनायकपञ्चाशदाख्ये स्तोत्रे

" आकृष्टवानसि भवाननुकम्पमानः
सूत्रानुबद्धशकुनिक्रमतः स्वयं माम् ।"

इत्यनेन सूचितः, इति कृतं प्रसक्तानुप्रसक्तेन बहुना विस्तरेण। अवशिष्टं चाचार्यचरितं महाचार्यकृतवैभवप्रकाशिकायां द्रष्टव्यम्। प्रकृतं तु प्रत्यवमृशामः—

सोयमाचार्यः ऋषिः कविराचार्य इति त्रेधापि व्यवस्थितेषु

कक्ष्याविभागेषु परिगणनीयः परिगणितश्च । तत्रायमलौकिकार्थदर्शित्वादृषिप्रथामर्हति । अपि चायं स्वयंगृहीतपुरुषकारेण भगवता श्रीहयग्रीवेण शिष्येणेव संनिधावुपविश्य पादुकासहस्रं लिखता महिम्नः परां कोटिमारोपितः इत्ययमपि वृत्तान्तो महर्षीणामप्यसुलभमस्यार्षं विभवमनक्षरमाचष्टे । वेदव्यासस्यापि हि महाभारतं लेखयितुकामस्य प्रयत्नप्रार्थितो विघ्नराज एव कथंचिल्लेखकतामङ्गीचकार ॥

अपि चाचार्यस्य सर्वतन्त्रस्वतन्त्रताबिरुदमसहमानैरन्यैः कैश्चिदसूयादूषितात्माभिः प्रयत्नसंधुक्षितः कश्चिन्महाजाङ्गलिकः आचार्याभ्यर्णमुपगम्य 'सर्वतन्त्रस्वतन्त्र स्वामिन्, मयि काचिदियमपूर्वा विद्या चिराय विलसति । यया कातरजनैश्चक्षुरुन्मील्यापि द्रष्टुमशक्या अष्टावपि नागेन्द्रा रज्जुपाशा इव यथाभिमतं प्रसार्यन्ते संह्रियन्ते च । एतामपि विद्यामधिरुह्यैवाचार्यः सर्वतन्त्रस्वतन्त्रो भवितुमर्हति ' इति स्वविद्यादर्पं दर्शयन्नुवाच । आचार्येण च 'भो जाङ्गलिकवर, दर्शय तावदसाधरणामात्मविद्याम् , अहमपि तावकैरेव फणाधरेन्द्रैर्विहर्तुमिच्छामि' इत्येवमुक्तः पेटिकामुद्घाट्य मन्त्रप्रभावयन्त्रितस्वैरानेकैकशो महा-

नागान् मोक्तुमुपचक्रमे । आचार्यस्तु कठिनीखण्डमादाय भूतले सप्त रेखा विलिलेख । तासां च प्रथमामेव रेखामनतिलङ्घ्य मूर्छापरिम्लाना दावानलपरिप्लुष्टा इव लता निपेतुः केचिदुरगाः। जाङ्गलिकस्तु परिभवामर्षपुनरुक्तत्वरः पूर्वाधिकसत्त्वान् विससर्ज भुजङ्गमानपरान् । ते च द्वितीयां रेखां स्पृष्ट्वा मूर्छिता निपेतुः । एवमुपर्युपरि बलवत्तराः क्रमेण प्रेरिताः फणीन्द्राः केचिदपि सप्तमीमाचार्यरेखां नातिपेतुः । अथासौ केनाप्यपराजितं सर्वस्वभूतं कर्कोटकं नाम सर्वनागाग्रेसरं 'जितमिदानीं मया' इति गर्जन् प्रजिघाय । सोयमत्युग्रविषानलज्वालापरिप्लुष्टपरिसरः सृक्वणी परिलेलिहानः सप्तापि ता व्यतिक्रम्य रेखाः सरोषमाचार्यचरणाभ्यर्णमाजगाम । आचार्येण च तत्क्षणप्रणीतगरुडदण्डकेनाभिष्टुतः स भगवान् पत्ररथेश्वरो हिरण्मयपक्षतिप्रभाच्छटापिशङ्गीकृतगगनाभोगो दुर्लक्षेण दूरोत्खातशैलशिखरेण मण्डलभ्रमिजनितहेमरेखासहस्रवलयितदिङ्मण्डलेन वेगातिशयेन व्योमाग्रादधःकृतपतनो दुर्दान्तं तं काकोदरेन्द्रं वज्रकठोरत्रोटिकोटिवेधविसंष्ठुलमहाभोगं रभसादुत्क्षिप्य दिवमेवोत्पपात । तच्चाद्भुतं दृष्ट्वा दुरभिभवामाचार्यशक्तिमवगच्छन् विस्मयानुशयव्यामिश्रहृदयो गुरुचर-

णानां चरणावभिवन्द्य 'भगवन् सर्वनागपरिक्षयादशरणोस्मि कृतः। आजीवो हि मे सर्वथा प्रणष्टः। यथा वह्नेरविदितदाहशक्तिविभवो रूपमात्रविलोभितदृष्टिः ससंभ्रमनिपतनेनाभिभवितुमिच्छन् शलभः स्वयमेव भस्मसाद्भवति, एवमदृष्टभवत्प्रभावस्य ममायमात्मकृतोनर्थ आत्मानमेव दहति। अस्यैकनागस्यापि प्रत्यर्पणेन मां प्रत्युज्जीवयत्वाचार्यः' इति प्रशान्तदर्पज्वरः अतिभूमिगतप्रश्रयावनतशिराः शतशः कृतपादपतनो ययाचे। गरीयसां हि संरम्भः प्रणिपातापनोदनीयः। ततश्चानुकम्पामृदूकृतात्मा गुरुवरो गरुडपञ्चाशता स्तुतिरत्नेन भूयोपि गरुत्मन्तमभितुष्टाव। आचार्यपक्षपाती च वेगातिशयकृतपक्षपातः पतङ्गकुलनाथस्तमुरगराजं चञ्चुकोटिकुट्टनहततेजःसारं श्रीकृष्णचरणन्यासमृदितफणावलयस्य कालियस्यानुकुर्वाणं गुरोरग्रतश्चिक्षेप। तथा कृतप्रसादः सोयमाहितुण्डिको विनयादाचार्यमापृच्छय प्रतस्थे॥

एकदा च समुपस्थिते पितृदिवसे निमन्त्रितेषु च प्रथममङ्गीकृत्य तस्मिन्नेव मध्यंदिने संनिहिते श्राद्धकरणे मिथ्यानुपपत्तिवचनैः कृतप्रत्यादेशेषु ब्राह्मणेषु क्षणमात्रानुध्यानजनितप्रसादो हृदयादि-

वावतीर्य देवो हयग्रीवो मिथो विविक्ताकारैरपि तुल्यतेजःप्रभावैस्त्रिभिर्विग्रहैरुपस्थिता वरणमङ्गीकृत्य निजभजनेन महोफलेन श्राद्धफलं साक्षादेव पूरितवान्। सूर्यावलोकनच्छलेन बहिर्निर्गत्य चिरंतनाभ्यसूयाकलुषाशयानां श्राद्धनाशं संवृत्तं मत्वा धृतापवादप्रथनप्रत्याशानां महान्तमन्तःसादं प्रदिदेश ॥

अथापि कदाचित् सयूथ्य एव कश्चिल्लक्ष्मणाचार्यो नामाचार्यपुरुषपरिभाषाभावितोत्कर्षो दर्पज्वरातिरेकप्रमुषितविवेकसारः पुरुषस्कन्धार्पितदण्डां भ्रान्तशिष्यजनावर्जनप्रयोजनां मणिकनकालंकारदीप्रशोभां कांचिदान्दोलिकामधिरुह्य प्रतोलीं बभ्राम। शिष्यसंसादि श्रीभाष्यप्रवचनतत्परो व्याख्यानासनासीनो निगमान्तगुरुः प्रत्युत्थानपुरस्करणाद्यकरणजातामर्षैर्लक्ष्मणाचार्यशिष्यैः सरभसं पादयोः परिगृह्य गृहवितर्दिकान्तः परिकृष्य वीथीपांसुमध्ये व्यसृज्यत । तावता च परिभवेन निजमनसः संक्षोभं संभाव्यमानमाकलय्य

“ अहंते नाहं ते विरहणपदं देशिकगिरः

स्वदन्ते नः स्वान्ते सपदि गतसंदेहविषयाः।

अनायासा यासामहिपतिशया सा भगवती
सदाधारा धाराधरनिकरसाधारणरुचिः ॥ ”

इति श्लोकेनोदीरणपर्यवस्थापितेन यथापूर्वप्रसन्नेन चेतसा शेषमपि कालक्षेपं निरवर्तयन् । स तु दर्पान्धो लक्ष्मणाचार्यः पराजितमाचार्यं मन्यमानोतिचक्राम । अथासौ निजावसथं प्रविष्टश्च महदपचारध्वस्ततेजाः मेहव्रणाक्रान्ताशेषगात्रोतिप्रवृद्धपूतिगन्धदूषितपरिसरः शिष्यैरपि रोगसंक्रमभीतभीतैरनुपसर्पद्भिर्दूरोज्झितसेवोपचारः स्वापराधस्मरणानुशयप्रक्षीणपौरुषः स्वजनेष्यदत्तसंभाषो लज्जानमन्मुखस्तूष्णीमासांचक्रे । तदा तस्य पत्नी पत्युः प्राणशरीरपरित्राणव्यसनिनी सोपचारं ससान्त्वं च तस्य शरीरमनसोः सादहेतुं पृच्छन्ती तेन च कथंचिन्मन्दीकृतव्रीडेनाचार्यापराधं प्रति निवेदितार्था तत्क्षणमेव सोपचारमाचार्यचरणाभ्याशमुपसेदुषी भर्तृभिक्षां याचमाना श्रीपादतीर्थमग्रहीष्ट । तेन चोपयुक्तेन गलिताशेषदोषो लक्ष्मणाचार्यो न केवलमरोगः, अपि तर्हि पूर्वाभ्यधिकवयोवर्णच्छायाबन्धबन्धुरगात्रो महोत्साहमानसो नवीकृत इवासीत् ॥

तदिदमीदृशमन्यदपि चाश्चर्यचरितं गणनातीतमस्य महर्षिमहि-

मातिशयस्य परां काष्ठां पिशुनयति । महर्षयो हि प्रायेण परतेजसा परिभूते स्वतेजसि चिरगुप्तमध्यात्मतेजःसारमनिच्छयापि वमन्त्येव । पश्चाच्च तपःपरिक्षयेण प्रणष्टसर्वस्वा इव परितप्यन्ते। नैवमाचार्यः । क्षमासारमेव हि चरितमाचार्यस्य । तस्मादाचार्यवर्यस्य महर्षित्वमसाधारणं बहुमुखमवसीयते । तदेतद् ब्रह्माण्डपुराणान्तर्वर्तिनि ब्रह्मनारदसंवादे श्रीमदहीन्द्रपुरक्षेत्रमाहात्म्ये तृतीयाध्याये औषधाचलप्रभावं प्रस्तुत्य,

"कलौ युगे महानेक ऋषिर्घण्टांशको हरेः ।
तपः कुर्वन् गिरौ तस्मिन् सिद्धिं प्राप्तो भविष्यति ।
तयोरश्वत्थसंज्ञस्य निकटे तत्र पर्वते । "

इत्युक्तम् । अत्रैकशब्देन सर्वमहर्षिविलक्षणमतिशायितं महर्षित्वमस्य दर्शितम् । आचार्यसिद्धिप्राप्तिरेव च गिरेः प्रभावातिशयनिदर्शनमिति चात्र व्यक्तमुक्तं भवति । कवित्वमपि चास्य नवरसनिधानभूतं स्वायत्तरीतिवृत्तिशय्यापाकव्यतिषङ्गपरिपचेलिमरसानुगुणरचनाविशेषबन्धुरमस्खलितप्रतिभानिष्यन्दनिरर्गलोपनीतनवनवार्थमनोहरं प्रथयन्तः परःशताः प्रबन्धा आकल्पमाकल्पभूताश्चेतःसु सचेतसां प्रथन्ते । शास्त्रप्रबन्धप्रणयनेष्वपि

कवित्वसंवलितमेव पाण्डित्यं महतीं शोभामावहति । यथा रामकृष्णादिमहापुरुषचरितेषु शृङ्गारानुगतो वीररसो रत्याह्वयमुत्साहाभिधं च स्थायिनौ भावौ रसविदामाशयेषु सममेव समर्पयन् ब्रह्मानन्दसब्रह्मचारिणं रसास्वादमादधाति, तथा उत्तरोत्तरतर्कव्यतिकरभासुरं शब्दार्थरचनासौन्दर्यसंवलितं प्रबन्धरत्नजातं प्रदर्शयन् शास्त्रगुम्फोप्याचार्यस्याभिज्ञजनहृदयद्रवीकरणक्षममन्यादृशं चमत्कारमावहतीति तदीयग्रन्थपरिशीलनमेवानुभावयति ॥

अथाचार्यत्वमप्यस्य सर्वातिरिक्तविशेषमवगम्यते । तच्चेदानीं शीलयामः—

" आचिनोति हि शास्त्रार्थानाचारे स्थापयत्यपि ।
स्वयमाचरते यस्मात्तस्मादाचार्य उच्यते ॥ "

इति खलु निरुक्तमाचार्यत्वम् । "अप्यक्षरसाम्यमात्राणि निर्ब्रूयात्" इति यास्कवचनादाचिनोतीति व्युत्पत्तिग्रहणम् । तत्र शास्त्रार्थाचयनं नाम प्रमाणान्तरागोचरस्य शास्त्रैकसमधिगम्यस्यार्थस्य शिष्यबुद्धिक्षेत्रेष्वावापः । तेन हि पाणिनिकात्यायनजैमिनिगौतमबादरायणादयः केचिदेव मुनिबृन्दारका आचार्यव्यपदेशेन व्यपदिश्यन्ते । तथायमपि न्यायविस्तराभिधानमशेषविद्यास्थानो-

पजीव्यमभ्यर्हिततमं विद्यास्थानं गौतमादिभिः पुरातनैः कृतेर-
त्राक्षेपमपि अनेकनवनवार्थयोजनया व्याघातपुनरुक्तवक्तव्यावच-
नावक्तव्यवचनादिदोषापोहेन श्रुतिस्मृतीतिहासपुराणशारीरकशा-
स्त्राद्यनुरोधेन च संस्कृत्य प्रदर्शयन्नसंदिग्धमाचार्यपदमनुभवति ।
सत्स्वपि खल्वैन्द्रादिव्याकरणेषु वैदिकलौकिकनिखिलशब्दस्वरू-
पावमर्शेन समग्रलक्षणप्रस्थानस्थापनादेव हि पाणिनिराचार्यतां
प्राप्तः ; एवं दोषदुष्टं सदप्यसत्कल्पं दोषोद्धारेण समग्रीकृत्य
न्यायदर्शनं दर्शयन् श्रीमद्वेदान्ताचार्य एव न्यायाचार्यशब्दस्य
मुख्यभाजनं भवति । भगवानेव हि श्रीरङ्गराजो वेदान्ताचार्य-
पदार्पणेनास्मदाचार्यवर्यमन्वग्रहीत् । तदेवमस्य संप्रतिपन्नमाचा-
र्यत्वम् ॥

अथ श्रीभाष्यकारमतिक्रम्य कथमर्वाचीनस्य कविकथकसिं-
हगुरोर्वेदान्ताचार्यत्वमीश्वरेणार्पितमिति शङ्का यद्यपि समुन्मिषति,
तथाप्यत्रेदं तत्त्वमवगम्यते—श्रीभगवद्रामानुजमुनिरेवाविकला-
वयवस्यास्य शारीरकशरीरस्य प्रथमो द्रष्टेति तावदविप्रतिपन्नम् ।
स हि श्रुतिस्मृतीतिहासपुराणशारीरकसूत्राणां परस्परसंवादं
भेदाभेदयोश्च श्रुतिप्रतिपन्नयोः श्रुत्यैव प्रदर्शितं विषयभेदेनाविरोधं

तत्तद्वाक्यस्वरसं न्यायोपपत्त्यादिकं च समग्रमवधाय दोषोपराग-विगमावदातं स्वेन सिद्धान्तेन वेदान्तपथमदर्शयत् । तदेतदभि-संधायैवानेन वेङ्कटनाथगुरुणा “प्राचीमुपेत्य पदवीं यतिराज-दृष्टाम्” इति, “आपादचूडमनपायिनि दर्शनेस्मिन्” इति, एवंप्रायमन्यदपि च तत्र तत्रोच्यते । तदेवं भगवद्रामानुजमुनि-वर्यः स्वोपज्ञं प्रवृत्तस्यास्य सिद्धान्तस्य पितैव हि भवति । पश्चात्तु प्रतिकथकैरुपर्युपरि संपतद्भिरापाद्यमानां वैयाकुलीमव-धूय निष्कम्पावस्थापने प्राप्तावसरे श्रीमतो घण्टावतारगुरोरवतारो लोकस्य शास्त्रस्य च भागधेयादुपलब्धः; अन्यथा हि विपन्न एव सिद्धान्तस्तत्वावबोधवन्ध्यो लोकश्च स्यात् । स्फुटीभूत श्चाय-मर्थो विद्यारण्यकृष्णमिश्रादिव्यतिकरवृत्तान्तैः । तस्माच्छ्रीभग-वद्रामानुजसिद्धान्तस्य कृतमतिमतिक्षेत्रेष्वावापः परिच्छिन्नप्रज्ञस्या-न्यस्य न सुकर इति जानता भगवता श्रीरङ्गनाथेन वेदान्ताचार्य-पदमस्यैवोपदीकृतम् । तदित्थं ‘सति धर्मिणि धर्माश्चिन्त्यन्ते’ इति न्यायेन श्रीभगवद्रामानुजाद्धर्मिसिद्धिः, यत्र संस्काराधानाय श्रीमद्वेङ्कटनाथगुरोराविर्भावः इति न किंचिदवहीनम् । अपि चास्य वेदान्ताचार्य इति सामान्यशब्दानिर्देशेन भगवद्रामानुज-

सिद्धान्तस्यैव वेदान्तव्यपदेशार्हत्वं नेतरस्येति च भगवता श्रीरमणेनैव दर्शितम् ॥

अयमस्याचार्यवर्यस्यावतारः स्वतःसिद्धं च वेदान्ताचार्यत्वमुभयमपि ब्रह्माण्डपुराणे तीर्थखण्डे भृगुनारदसंवादे श्रीवेङ्कटाचलमाहात्म्ये स्पष्टमुच्यते । तत्र हि चक्रवर्तिनाम्ना चोलनृपेण आजन्मसिद्धभगवद्भक्तिपूतात्मना सह चिराय कृतसंलापो देवदेवः श्रीश्रीनिवासः कृष्णशर्मणो नाम भक्ताग्रेसरस्य ब्राह्मणस्य मृतभार्याप्रत्युज्जीवनेनानुग्रहप्रावीकृतस्य भावि वृत्तान्तं प्रस्तुवानः ,

"कृष्णशर्मातिसंतुष्टो विस्मितश्च महामुने ।
प्रणम्य स्तोत्रयामास देवदेवं रमापतिम् ॥
देवदेवो नृपं प्राह न चास्य सदृशो भुवि ।
विप्रस्य मयि भक्तस्य तथैव नियतात्मनः ॥
असौ जन्मान्तरे राजंस्त्वय्यनन्तार्थप्रवर्तकः ।
भविष्यति तदन्ते च मत्सायुज्यमवाप्स्यति ॥"

इत्यष्टाचत्वारिंशैकोनपञ्चाशपञ्चाशैः श्लोकैरमुमर्थं प्रदर्शयति । श्रीवेङ्कटेशाष्टोत्तरशतनामावल्यां च "कृष्णाख्यविप्रवेदान्तदेशिकत्वप्रदाय नमः" इति द्विनवतितमो नामपाठश्चात्र प्रमाणीभवति ।

तस्माद्वेदान्ताचार्यशब्दो जन्मद्वयासिद्धाभ्यां श्रीनिवासश्रीरङ्गनाथदिव्यानुग्रहाभ्यामेव घण्टावतारगुरोः प्राप्त इति नैकप्रमाणप्रतिपन्नोयमर्थः ; यतो नात्र कल्पितत्वशङ्काङ्कुरावकाशः । यदपि 'आचारे स्थापयत्यपि' इति द्वितीयमाचार्यपदप्रवृत्तिनिमित्तमुच्यते, तस्यापि मुख्यार्थः श्रीमत्यस्मिन्नाचार्ये समग्र एव विलसति । अनेन हि श्रीपाञ्चरात्ररक्षासच्चरित्ररक्षादिकं प्रणीतवता तप्तचक्राङ्कनादयः पञ्च संस्कारा भगवदाराधनभोज्याभोज्यनियमादयश्चाचाराः श्रुतिस्मृतीतिहासवैखानसपाञ्चरात्राद्यविरोधेन सुव्यक्तमुपदर्शिताः । द्वात्रिंशता च रहस्यसंज्ञितैः संप्रदायनिबन्धनग्रन्थैराबालादा च प्रबुद्धाद्यथाधिकारं प्राप्यप्राप्तृस्वरूपप्राप्त्युपायप्राप्तिफलप्राप्तिप्रतिबन्धकरूपमर्थपञ्चकं चिदचिदीश्वरात्मकं च तत्त्वत्रयमसंदिग्धमव्यतिकीर्णं च सुष्ठु प्रतिपादितम् । मोक्षधर्मस्य च वर्णाश्रमधर्मैरसंकरो वर्णाश्रमधर्माणां च व्यवस्थितत्वं मोक्षधर्मस्य सर्ववर्णसाधारण्यं च श्रुतिस्मृतीतिहासपुराणभगवच्छास्त्रादिप्रमाणकलापसंवादेन पर्यवस्थापितानि । अधीतवेदस्यैव हि ब्रह्मविद्यायामधिकारं शास्त्राण्यनुशासति । न चानुपनीतस्याध्ययनमधिकृतं भवति । नाप्यत्रैवर्णिकस्य विहितमुपनयनम् । तदेवं

तुर्यस्य वर्णस्यावर्णानां च दूरापोढ एव ब्रह्मविद्यानुग्रहः । सन्ति तु बहवः सत्त्वोत्तरा वीतरागा मुमुक्षवश्चात्रैवर्णिकेष्वपि । त्रैवर्णिका अपि हि सन्तः कति कति रजस्तमःप्रचयपरिमुषितसत्त्वोन्मेषा विपर्ययगृहीतशरीरात्माभिमानग्रस्तसमस्तविवेकाः कामकामाः परिभ्रमन्ति । एवं मुमुक्षुत्वतदभावौ व्यवधूय शरीरग्रहमात्रमनुविधाय च ब्रह्मविद्याधिकारं स्वच्छन्दमेव विदधच्छास्त्रं कथं लोकहिताय कल्पतामिति चिन्तयतां समपक्षपातचेतसां बहूनामनास्थैव शास्त्रार्थे समजनि ; यद्वशात् बाह्यागमाः शतशो निरङ्कुशाश्चातुर्वर्ण्यव्यवस्थानिरासच्छलेन मनस्विनामपि मनांसि क्षोभयितुमलमभवन् ॥

अत्र चान्तरे भगवान् श्रियः पतिः चिराय बाह्यैरबाह्यैश्च नास्तिवादेन मायावादादिना च नास्तिकतामेवान्ततः पर्यवसाययद्भिः कैश्चिदाचार्यैः श्रुतिस्मृत्यादिविहितान् संस्कारानाचारांश्चार्थतः परित्याजितमनेकजननान्तरपरिणतादभागधेयात् सर्वकामदुघाया भगवद्भक्तेरभाजनीकृतं जनमिमं कृतार्थयितुमव्याजकरुणावशंवदमानसः स्वान्येव पञ्चधापि स्थितान्यायुधानि विपक्षक्षपणत्वरातिशयेन संगमय्य श्रीभगवद्रामानुज-

यतिराजवपुषा भुवमवतारयामास । स चैष भगवान् यतिराजो भगवदभिमतं श्रुतिस्मृत्यादिसंप्रतिपन्नं च स्वं सिद्धान्तं लोकानुग्रहाय विश्वतः प्रचयं गमयिष्यन् उदात्ताभिजनविद्यावृत्तवैभवांश्चतुःसप्ततिमाचार्यपुरुषान् सिंहासनाभिख्याप्रदिष्टगौरवाणि चतुःसप्ततिव्याख्यानासनान्यध्यारोप्य पृथक् पृथक् तान् शशास । यथा— ' अयि भोः, युष्माभिरनूचानशिष्टजनसंप्रदायपरिप्राप्तां सदाचारपद्धतिं मात्रयाप्यनतिपतद्भिः रमारमणचरणकमलैकान्तविश्रान्ताशेषभावैः शश्वत् सदाचार्यसेवया सत्सङ्गेन च विमलीकृततत्त्वज्ञानपूतात्मभिः श्रीमद्वकुलभूषणादिसत्त्वोत्तरशमधनवरावतारकृतप्रकाशां दक्षिणामेव दिशं प्रथमतः परिगृह्य तत्र तेषामेव मुनिवराणामाजन्मसिद्धतपसामनुजिघृक्षया दर्शितनानारूपदिव्यमङ्गलमूर्तेर्भगवतोभिव्यक्तिक्षेत्रेषु श्रीरङ्गादिष्वष्टोत्तरशतसंख्यापरिसंख्यातेष्वात्मशुद्धये कृतावसथपरिग्रहैर्जनमनसामावर्जनाय सिंहासनाधिपत्यसदृशीं गजतुरगपदातिच्छत्रचामरादिपरिजनपरिच्छदप्रदर्शितविभावातिशयां शिखासितोर्ध्वपुण्ड्रविमलाम्बराच्छादनतुलसीनलिनाक्षमालामकरकुण्डलादिविलक्षणपरिकर्मपरिकर्मितां श्रीमच्छ्रीवैष्णवसिद्धान्तविजयवैजयन्तीं श्रीमद्विष्वक्सेनोपदर्शि-

तवर्त्मानुवर्तिनीं कामपि सेनापतित्वसधर्मिणीमाचार्यपुरुषलक्ष्मी-मङ्गीकृत्य ग्रामं ग्राममुपसद्य तत्र तत्र विभवोपनीतार्हणमहाजना-भ्युद्गतैरुपकार्याः प्रविश्य महार्होपहारकृतोपचाराणि वरासनान्य-ध्यास्य तांस्तांश्च ग्रामीणान् नागरान् वा यथाप्रधानमासनदा-नकुशलानुयोगादिभिः सत्कारैः सत्कृत्य विरोधव्याघाताक्लिष्टादि-दोषाणां परमतदुष्टानामभिव्यञ्जनेन स्वसिद्धान्ते तथाविधदो-षास्पर्शप्रदर्शनेन च गुणोत्कर्षवशीकृतसभिकजनां सूनृतां वाचं विसृजद्भिः प्रथमं तावदात्मा विस्रम्भपात्रतामारोप्यताम् । अथ जना अस्मदीये परमैकान्तिसिद्धान्ते धृतप्रणयाः सक्तमनसश्च क्रियन्ताम् । तदनु पञ्चभिः श्रीवैष्णवसंस्कारैः संस्कृतास्ते भागवतकाष्ठां क्रमादानीयन्ताम् । एवमैकान्तिकीं भगवच्चरणा-नुरागितामवलम्ब्य प्रवर्तमाना भागवतपद्धतिरसौ जननमात्र-निबन्धनां वर्णाश्रमादिप्रतिनियतिं न प्रतीक्षते । पञ्चैते श्रीवै-ष्णवसंस्काराः स्वानुबन्धेन सर्वान् वर्णान् परिपुनीयुः ; येन मुमुक्षामात्रं मोक्षोपायाधिकाराय संपद्येत ’ इति ॥

अथ तथा विधातुं परिकल्पितमहासंरम्भेषु तेषु चतुःसप्ततौ सिंहासनाधिपतिषु वर्णत्रयव्यतिक्रान्ता अपि बहवः कृतसंस्काराः

सत्त्वोत्तराः सुसंप्रदायपरिप्राप्तविशुद्धाचारजनितेन भागवतश्रीवि-शेषेण स्वस्य परस्य च जनस्य सविशेषसंभावनीया विवेकवि-मलात्मानश्चाभ्युदिताः ॥

एवं सर्वप्रकारैरभ्युच्छ्रयैरभ्युच्छ्रितानामपि तेषामतिक्रामता कालेन निजायां सन्ततौ वर्णभेदनिबन्धनं न्यूनातिरेकं परि-शिष्यमाणमेव पश्यतां मनांसि नातीव प्रसेदुः । ततश्च वर्णावर-त्वपिशुनान् कर्माचाराननिच्छतो ब्राह्मणोचितानेव शिक्षितुमनुष्ठातुं च कृतोत्सवान् शिष्यानर्थग्रहणलोभादनुरुन्धानाः केचिदाचार्याः वर्णव्यवस्थामेव भक्तिविभवव्यपनेयामुदाहृत्य संगृह्णन्तो धर्मवि-प्लवाय प्रवृत्ताः । ते हि

"न शूद्रा भगवद्भक्ता विप्रा भागवताः स्मृताः ।
सर्ववर्णेषु ते शूद्रा ये ह्यभक्ता जनार्दने ॥"

इत्येवंप्रायमर्थवादं प्रमाणीकृत्य बलवत्तरविंशतिप्रतिपन्नं सदाचारपथं दूरतो व्यपवर्जयितुमारब्धाः । तस्मिन्नेव च काले श्रीमान् शेषाचलनाथः श्रीमद्वेङ्कटनाथदेशिकरूपेण निजां घण्टा-मवतारयामास ।

“ यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ ”

इति हि स्वयमुच्यते भगवता । सोयमाचार्यः शास्त्रसिद्धप्रमाणबलाबलपरीक्षालब्धवर्णो लोकशास्त्रविद्विष्टमेतादृशमुपदेशं परिमृज्य ‘न हि केवलेनार्थवादप्रामाण्येन श्रुतिस्मृतिशिष्टाचारसंप्रदायनिष्कम्पव्यवस्थापितानां वर्णाश्रमाचाराणां धर्माणां वा कथंचिदपि विपर्यासो भवितुमर्हति । अपि च, ‘न शूद्रा भगवद्भक्ताः’ इत्यादिवचनं भगवद्भक्तिलब्धातिशयं शूद्रत्वं भगवद्भक्तिविधुराद्विप्रत्वादपि प्रकृष्यते; न हि विगुणया जात्यैव केवलं यः कश्चिदपि पुरुषार्थः सिध्यति । विदुरादयः खलु श्रीमद्वासुदेवपदकमलासङ्गपूतचेतसः सर्वसंभावनीयामैकान्त्यलक्ष्मीं परिजगृहुः। श्रीमच्छठमथनमुखाश्च शमधनप्रकाण्डा भगवन्मया भगवत एव प्रासादेषु भगवतैव समं तुल्यरूपामभ्यर्हणामनुभवन्ति । द्विप्रकारं हि जगति ब्राह्मण्यं परिदृश्यते--- बाह्यम्, आभ्यन्तरं च । तत्र वेदाधिकारवैदिकार्थानुष्ठानादिफलं यदेतच्छरीरोपक्रमं बाह्यं तद्वर्णव्यवस्थाव्यवस्थितं न वर्णान्तरजन्मनां सुलभम्। आभ्यन्तरं तु ज्ञानभक्तिवैराग्यादिपरिपूतसत्त्वगुणा-

भ्युदयनिबन्धनमनोमात्राश्रयम्। कर्मवैचित्र्यादलब्धविप्रजन्मनोऽपि कस्यचित् सुकृतविशेषोपलब्धसदाचार्यचरणाश्रयादिना समुन्मिषितसत्त्वचन्द्रालोकपरिभूतरजस्तमसः स्वतः खलु प्रसीदति स्वान्तम्। तदेव चाप्रतिहतं साधनं निःश्रेयसस्य। अन्तरेण चेदं जातिमात्रब्राह्मण्यं किं करिष्यति?। आकरोद्धृतस्यापि सुवर्णस्याकृतसंस्कारस्य कथं विशेषग्रहः पृथिवीपांसुपतितस्य' इत्यादिकं शास्त्रार्थं परितः समालोच्य भागवतकाष्ठां वर्णभेदात् पृथक्कृत्य स्वकर्मत्यागपरधर्मपरिग्रहादिरूपान्निरयहेतोर्वैशसाल्लोकं विनिवार्य प्रशस्तकुलजन्मनां कुलावराणां च मुक्तिप्राप्तिहेतुं न्यासाख्यमकृच्छ्रसाध्यमपक्षपातिनं सर्वसाधारणं सर्वश्रुतीतिहासपुराणभगवच्छास्त्रादिसिद्धं रामकृष्णाद्यवतारावतीर्णेन स्वयमेव च भगवता फलाविनाभाविनमनुष्ठितमुपायं शिष्यबुद्धिक्षेत्रे वपन् कृतार्थयामास सममेव मोक्षकाङ्क्षिणमशेषं जनम्॥

तदेवंप्रायैरुपदेशनिर्णयैरनुष्ठानप्रदर्शनैश्च "आचारे स्थापयत्यपि" इत्युक्तं द्वितीयमपि प्रवृत्तिनिमित्तं पुष्कलीकृतमनेन श्रीमता गुरुवरेण। स्वयमाचरणं चात्मचरितेनैव स्फुटीभवति। स एष महर्षिर्महाकविर्महांश्चाचार्यवर्य इति त्रिष्वपि प्रथममुपन्य-

स्तेषु कक्ष्याविभागेषु परां कोटिमासीदति । किंच निरुपपदो देशिकशब्दः श्रीमति श्रुतिमौलिगुरौ विबुधवरैः प्रयुज्यते । प्रयुज्यमानश्चाविलम्बितममुमेव गुरुं प्रत्याययति । सोयमसाधारणमुत्कर्षविशेषं सूचयति । तस्य हि शब्दस्यैषा निरुक्तिः; यत्तावत्,

"देवानुग्रहधारित्वाच्छिष्यानुग्रहकारणात् ।
करुणामयरूपत्वादुच्यते देशिको बुधैः ॥" इति,

'देशिको मूलमन्त्रेण' इति च श्रीपाञ्चरात्रम् । तदेवं सर्वप्रकारप्रकर्षशालिनः श्रीमतो घण्टावतारगुरोः कृतिरियं न्यायपरिशुद्धिः न्यायविस्तरस्यैव विद्यास्थानस्य तदनुयायिनश्च प्राज्ञलोकस्य काचिद्भागधेयपरिणतिरिति परिशीलितग्रन्थानामुपन्यासादृतेपि प्रतिपत्तिसुलभम् । सर्वतन्त्रस्वतन्त्रगुरुप्रणीतेषु निबन्धेषु क्वचिदपि भ्रमप्रमादविप्रलम्भाशक्तयो मात्रयापि न संभाव्यन्ते ; येन सर्वातिरिक्तमप्रकम्प्यमेतेषां प्रामाण्यम् । सा चैषा न्यायपरिशुद्धिर्गौतमादिविहितरेखामात्रगृहीतरूपस्य सर्वोपजीव्यस्य न्यायविस्तरस्य विद्यास्थानस्य समस्तदोषरजःपरिमार्जनदर्शिताभिनवरूपा प्रत्यङ्गसंस्कारोपपादनप्रगुणीकृतसौभाग्या च

काचिदाचार्यविरचिता मूर्तिरिवाभाति । पूर्वं हि दिङ्नागप्रभृतयः सुगतमताचार्याः स्वबुद्धिपरिकल्पितैर्दूषणैर्गौतमीयं न्यायदर्शनं विक्षोभयामासुः । यदपोहेन गौतमदर्शनस्य संस्कारान्तरमाधातुं स्वस्य न्यायवार्तिकप्रणयनमुद्योतकारेण ग्रन्थारम्भे प्रदर्शितम् । तस्यापि न्यायवार्तिकस्य तदर्वाचीनैः कृतं कलङ्कं परिमार्ष्टुं तात्पर्यटीकां नाम न्यायवार्तिकव्याख्यां वाचस्पतिमिश्रः प्रणिनाय। तदुपर्यपि शास्त्रपद्धतिं निष्कण्टकीकरिष्यन्नुदयनाचार्यस्तात्पर्यटीकाया अपि टीकान्तरं तात्पर्यपरिशुद्धिं नाम कामपि विवृतिं व्यवृणोत् । तेषामपि परिश्रमकृतावधानानां न्यायाचार्याणामालोकपथमप्राप्तान्येव बहूनि न्यूनानि शास्त्रस्य पर्यशिष्यन्त । पूर्वाचार्यैरपि शारीरकमीमांसाशरीरसंस्कारतत्परैः श्रीभगवद्यामुनभट्टपराशरादिभिरङ्गभूतां न्यायशास्त्रप्रवृत्तिं समग्रोपयोगामाधातुकामैरपि संस्कारभित्तौ चिरलग्नया प्राचीनन्यायशास्त्रवासनया क्वचित्क्वचिदुपरक्तबुद्धिभिर्नात्यन्ताय वैमल्यमनीयत मार्गः, इति निःशेषसंस्कारणार्था न्यायपरिशुद्धिग्रन्थप्रणयनप्रवृत्तिराचार्याणां न केवलं न्यायविस्तरस्य, अपि तर्हि शारीरकादेरपि शास्त्रस्य कथकानां कथाव्यतिकरस्य च कंचिदन्यादृशमुपकारमावहति,

